॥ २६ ॥ प्रचेतसांनारदस्यचसंवादश्च एतदाख्यानं तेभिहितं ... नमस्यमिदं तत् ॥ २५ ॥ यएषवंशः सोऽनुवर्णितः ॥ २६ ॥ यः प्रथ
व्रतः ॥ २७ ॥ २८ ॥ २९ ॥ स्वान् ज्ञातीन् दिदृक्षुः ॥ ३० ॥ ... चरितमितिशेषः ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेश्री

...ष्पादप...

...पने

...वेऽपितन्...नयातंयशोलोकमलापहं ॥ हरेर्निशम्यतत्पादंध्यायंतस्तद्गतिंययुः ॥ २४ ॥ एतत्तेभिहितंक्षत्तर्य
न्मांत्वंपरिपृष्टवान् ॥ प्रचेतसांनारदस्यसंवादंहरिकीर्तनं ॥ २५ ॥ श्रीशुकउवाच यएषउत्तानपदोमा
नवस्यानुवर्णितः ॥ वंशःप्रियव्रतस्यापिनिबोधनृपसत्तम ॥ २६ ॥ योनारदादात्मविद्यामधिगम्यपुनर्महीं ॥
भुक्त्वाविभज्यपुत्रेभ्यऐश्वरंसमगात्पदं ॥ २७ ॥ इमांतुकौषारविणोपवर्णितांक्षत्तानिशम्याजितवादसत्क
थां ॥ प्रवृद्धभावोऽश्रुकलाकुलोमुनेर्दधारमूर्ध्नाचरणंहृदाहरेः ॥ २८ ॥ विदुरउवाच सोऽयमद्यमहायो
गिन्भवताकरुणात्मना ॥ दर्शितस्तमसःपारोयत्राकिंचनगोहरिः ॥ २९ ॥ श्रीशुकउवाच इत्यानम्यत
मामंत्र्यविदुरोगजसाह्वयं ॥ स्वानांदिदृक्षुःप्रययौज्ञातीनांनिर्वृताशयः ॥ ३० ॥ एतद्यःशृणुयाद्राजन्राज्ञां
हर्यर्पितात्मनां ॥ आयुर्धनंयशःस्वस्तिगतिमैश्वर्यमाप्नुयात् ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधे
ऽष्टादशसाहस्र्यांसंहितायांप्राचेतसोपाख्यानंनामएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ छ ॥ ॥ छ ॥

धरस्वामिविरचितायांश्रीभागवतभावार्थदीपिकायामेकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥